# अथ शौनकशिक्षा

सर्वज्ञं सर्वकर्तारं सर्वात्मानं शिवं गुरुम्
प्रणम्यर्क्षु प्रवक्ष्यामि वर्णोच्चारणलक्षणम्  १
वेदस्य लक्षणं सम्यग्बालानां बुद्धिवर्धनम्
यथोक्तं पूर्वशास्त्रेषु तथा संक्षिप्तमर्थवत्  २
द्विविधं वर्णजातं हि स्वरो व्यञ्जनमेव च
अकारादिस्वरो ज्ञेयः कादि व्यञ्जनमुच्यते  ३
द्विविधश्च स्वरो ज्ञेयो नासिक्यस्सानुनासिकः
उदात्तश्चानुदात्तश्च स्वरितः प्रचयस्तथा  ४
कादीनां पञ्च वर्गाश्च स्पर्शा इति हि संज्ञिताः
दुस्पृष्टश्चेति विज्ञेयो डढयोस्स्वरमध्ययोः  ५
वर्गाणां प्रथमा वर्णा द्वितीया ऊष्मसंज्ञिताः
हकारवर्ज्याश्चाघोषाः शिष्टं घोषवदुच्यते  ६
नासिक्याः पञ्चमा वर्णा अनुस्वारस्तथैव च
चत्वारश्च यमाः प्रोक्ता अव्यक्तास्सानुनासिकाः  ७
चतस्रो यादयोऽन्तस्था नासिक्या अप्यरेफिकाः
ऊष्माणश्शादयश्चैव चत्वारश्चेति कीर्तिताः  ८
जिह्वामूलीय इत्युक्त उपध्मानीय एव च
कपाश्रितौ चोष्मजातौ विसर्गस्य च सम्भवौ  ९
ह्रस्वो दीर्घः प्लुत इति स्वराः कालेन संज्ञिताः
सन्ध्यक्षराणां कालश्च दीर्घप्लुतौ न मात्रिकः  १०
व्यञ्जनानान्त्वर्धमात्रा स्वरभक्तेस्तथैव च
संयोगे पादमात्रा स्यात्स्वरभक्तिः प्रकीर्त्यते  ११
ह्रस्वात्परस्त्वनुस्वारास्त्रिपादः परिकीर्तितः
स च ह्रस्वस्त्रिपादः स्यात् द्वावेतौ सममात्रकौ  १२

दीर्घात्परस्त्वनुस्वारः पादमात्रः प्रकीर्तितः
स च दीर्घस्सपादः स्याद्वर्णकालो निगद्यते १३
अकुहाः कण्ठजाः प्रोक्ता विसर्गश्चापि कण्ठजः
तालाविचुयशा जाता मूर्धन्यृटुरषा स्मृताः १४
दन्त्या लृतुलसाः प्रोक्ता उपध्मानीय ओष्ठजः
उपू ओष्ठ्यौ विजानीयात् वो दन्त्योष्ठस्तथैव च १५
ए ऐ तु कण्ठतालव्यौ ओ औ कण्ठोष्ठजौ स्मृतौ
स्पर्शानां करणं स्पृष्टं अन्तस्थास्वीषदुच्यते १६
स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्
संवृतञ्चेत्यकारस्य सर्ववर्णो निगद्यते १७
ओ औ उवर्ण इत्येषामनेकस्य च सङ्गमे
सकृदोष्ठ्यौ विजानीयान्नान्यश्चेन्मध्यगः स्वरः १८
उषो न ओषूणो अग्ने द्विषो युयोतु यूयुविः
विरामे च विवृत्तौ च मध्ये चेत् व्यञ्जनद्वयम् १९
द्विरोष्ठौ तु विगृह्णीयाद्वकारे त्वधरं तथा
यन्मयोभु उदीरय ताभिरूषु ऊतिभिः २०
भ्रातुः पुत्रान्धेनुं सोमस्सुष्टुतिर्मोषु वो अस्मत्
कुतुप्वो यत्र दृश्यन्ते सन्धिस्थानेषु नित्यशः २१
स्ववर्गेण नियुक्ताश्चेत् वीरं तत्रैव कारयेत्
ज्योक्करुत्तराहमुत्तर इमम्म इति च २२
नकारस्य पदान्तस्य रेफोन्तस्थास्वरोष्मसु
लोपस्त्वाकारपूर्वस्य सशौ तु तचयोः परे २३
पूर्वस्वरश्च नासिक्यस्स च रंगः प्रकीर्तितः
पूर्वकालो यथा तस्य रज्यमाने स एव च २४

दस्यूँ र्योनौ पणी ँर्हतं कवी ँरिछाम्यवराँ इन्दो
ताँ स्त्रायस्वावदँ स्त्वञ्च ताँश्च पाहि पुत्राँश्चेति २५
नृन्पे च स्वतवान् पायौ विसर्गश्च विधीयते
अवर्णस्यानकारस्य स्वरे रङ्गः क्वचिद्भवेत् २६
नृँः पात्रं स्वतवाँः पायुस्सवायँ एव स चाँ इन्द्रः
उः पदे रज्यते दीर्घः पदान्तः प्लुत एव च २७
पदान्तस्य विधिः प्रोक्तः पदमध्येऽपि दृश्यते
अभूदुपारमुभा उनूनं विन्दतीति २८
माँस्पचन्या माँश्चत्वे ह्रस्वत्वे च मँश्चतोः
मकारस्य पदान्तस्य रेफोष्मसु परेषु च २९
अनुस्वारो भवत्येव पदमध्यगतेष्वपि
त्वं रथं तं हिन्वन्ति त्वं शुक्रस्य तां सुते कीर्तिम् ३०
समानोदर्के षष्ठेऽहनि मांसमेकः पिंशति
स्ववर्गपञ्चमश्चैव स्पर्शेषु विषयेषु च ३१
अन्तस्थासु च ता एव मकारस्य विधिः स्मृतः
इदङ्कवेः तङ्गीर्भिर्नकिष्टङ्घ्नन्ति जङ्घ्नतः ३२
सञ्चोदय सञ्जानानास्तन्त्वातन्देवाश्शन्नः
त्वम्पवित्रे प्रतरँल्लायन्तय्यत् संवर्धतेति च ३३
परस्परस्तु संयोगः स्पर्शानां संभवेद्यदि
तत्पूर्वस्य श्रुतिर्नास्ति विरामे व्यञ्जनस्य च ३४
वाक्पूता वाग्देवी विट्कुला द्विभ्राट्बृहत् तत्पुनः
जङ्घ्नन्ति त्रिष्टुब्गायत्र्यर्वाग्वितदनुष्टुप् ३५
स्पर्शानां पञ्चमैर्योगे भवन्तो हि यमाः स्मृताः
अयःपिण्डेन तत्तुल्यं घनबन्धाः प्रकीर्तिताः ३६

पलिक्नीर्यज्ञरत्नानि विघ्नाघ्नानं ररभ्म च
स्पर्शाश्च पञ्चमाश्चैवमन्तस्थाभिश्च संयुताः ३७
दारुपिण्डेन तत्तुल्यं घनबन्धाः प्रकीर्तिताः
शक्यं सरव्यं कृच्छ्रं वज्रं राष्ट्र्यत्येतीड्यं सम्राट् ३८
मीढ्वान्तथ्यं वाध्र्यश्चोतापम्लुक्तं विभ्वीरुच्यते
ऊष्माणः पञ्चमैर्युक्ता अन्तस्थाभिश्च संयुताः ३९
ऊर्णापिण्डेन तत्तुल्यं श्लथबन्धाः प्रकीर्तिताः
अश्नोतु विष्णुर्घृतस्नु अस्मे युष्मे इति स्नुषे ४०
अस्य वामस्याजुष्रन्नश्वस्सम्मिश्ल इत्यपि
वकारस्तु नकारेण णकारेण च संयुतः
श्लथबन्धस्स विज्ञेयो दुस्पृष्टश्चात्र चोच्यते ४१
विसर्जनीयस्य यदा कपयोः परतः स्थितिः
न संहितायां भवतः ऊष्मजातौ परिग्रहे ४२
ऋलृस्वरौ यत्र पूर्वौ ऊष्मसंज्ञे परे स्थिते
पूर्वस्वरस्य संभाक् स्यात्स्वरभक्तिः प्रकीर्त्यते ४३
हकारं पञ्चमैर्युक्तं अन्तस्थाभिश्च संयुतम्
उरस्यं तं विजानीयात्परं चेत् पृथगुच्चरेत् ४४
प्रथमात्तु हकारो यस्तच्चतुर्थमवाप्यते
स्वतृतीयमवाप्नोति पूर्ववर्णस्तदा हि सः ४५
अनुस्वारस्वराभ्यान्तु संयोगादिर्द्विरुच्यते
ऊष्मणः प्रथमौ ज्ञेयौ लात् स्पर्शौरपरस्तथा ४६
ह्रस्वपूर्वौ नङौ द्वित्वमापद्येते स्वरोदयौ
प्रथमाच्च नकाराद्वा शकारश्छत्वमेव च ४७
ह्रस्वात्तु द्विछकारोऽत्र यो दीर्घादपि दृश्यते

पवमान सह यस्य तनेचाति हायवर्जिताः ४८
नटाभ्यां से परे मध्ये तकारः संप्रजायते
नतयोर्लचवर्गे च सवर्णः स्यात्परस्य तु ४९
पदान्ताः प्रथमा वर्णाः घोषसंज्ञे स्वरे परे
स्वतृतीयानवाप्यन्ते पञ्चमे पञ्चमांस्तथा ५०
अपदान्ताः प्रथमा वर्णा ऊष्मसंज्ञे परे स्थिते
वर्णा द्वितीया विज्ञेया उच्यन्ते वर्णवेदिभिः ५१
यकाररेफावित्येतौ ऋकारेण च संयुतौ
ओष्ठौ तत्र न कम्प्येत क्षिप्रमेतत् प्रचक्षते ५२
नादस्तु श्रूयते घोषात् विरामाद्द्वित्वतस्तथा
अनासिक्योऽथ नासिक्यो जायते वर्णरूपतः ५३
नीचैस्वरोऽनुदात्तस्स्यादुच्चैश्चोदात्त उच्यते
स्वरितस्तत्समाहारस्तदैक्यं प्रचयः स्मृतः ५४
अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः
स्वरितः कर्णमूलीयस्सर्वस्मिन् प्रचयः स्मृतः ५५
मध्ये तु कम्पयेत्कम्पं उभौ नीचौ समौ भवेत्
द्विगुणं वर्णकालाच्च पादः कम्पार्थमिष्यते ५६
अनुदात्तमुपादाय स्वरितं ह्यवलम्बयेत्
पुनर्निहतमागछेदेष कम्पविधिः स्मृतः ५७
उदात्तः पूर्वभागस्तु परभागो निहन्यते
उदात्तकम्प इत्युक्तः कुत्रचिच्चापि दृश्यते ५८
स्थानं कालो विकारश्च संवृतं विवृतागमौ
ईषत्स्पृष्टमघोषत्वं स्वरः कम्पस्तथोष्मता ५९
घोषानासिक्यनासिक्याः वर्णधर्मास्त्विमे मताः

यावन्तो यत्र ये धर्मास्तावन्तस्तत्र तान् विदुः ६०
चतुर्मात्रश्च षरामात्रः प्रणवः कीर्त्यते बुधैः
पूर्वस्वरः परो नादस्सममात्रः प्रकीर्तितः ६१
अनुदात्तः स्वरो ज्ञेय उदात्तो नाद उच्यते
लक्षणं प्रणवस्येदं प्रणवो ब्रह्म कीर्त्यते ६२
तैलधारामिवाछिन्नं दीर्घघण्टानिनादवत्
अवाग्जं प्रणवस्याग्रं यस्तं वेद स वेदवित् ६३
त्रिस्थानञ्च त्रिमात्रञ्च त्रिब्रह्मञ्च त्रियक्षरम्
त्रिमात्रादर्धमात्रन्तु यस्तं वेद स वेदवित् ६४
वेदो हि वर्णसंघातो वेदो ब्रह्मेति कीर्त्यते
तस्मात्तं वेद वर्णज्ञो ब्रह्मलोके महीयते ६५
एतत्पुण्यं पापहरं वाङ्मलस्य विशोधनम्
भक्त्या ज्ञात्वा च संगृह्य ब्रह्मलोकं स गच्छति ६६
अनेन विधिना वेदं योऽधीते श्रद्धयान्वितः
सर्वपापैर्विमुक्तस्सन् ब्रह्मलोके महीयते ६७

इति शौनकशिक्षा समाप्ता

Reference:
K.N.M. Divakara Dvijendra, ed., *Śaunaka Śikshā with Sanskrit and Malayalam Commentaries*, Tripunithura: Mangalodaya Press, 1962, pp. 1-40.